'अथ यन्तारमादिश्य धुर्यान् विश्रामयेति सः।
तामवारोहयत् पत्नीं रथादवततार च॥'

Mallinatha has explained the point exactly in the same way and has also suggested (the क्लपाठ) 'विश्रमय' in place of विश्रामय।

'ग्लास्नावनुवमाञ्च' (ग. सू. 190) 'These roots ग्ला, स्ना, वनु and वम्, if not preceded by any उपसर्ग, become मित् optionally. This option or better this rule is to furnish मित्व to the first two ग्ला and स्ना which not being घटादि could not be मित् and to make उपधादीर्घ of the last two वनु and वम् which being मित् could not have the option (cp—'वनु च नोच्यते' and जनीजृष्— ग. सू. 188.). Instances are ग्लापयति—ग्लपयति। स्नापयति—स्नपयति। वानयति—वनयति। वामयति—वमयति।

'न कम्यमिचमाम्' (ग. सू 191). 'The roots कमि (कम्), अमि (अम्) and चम् will not be considered as मित् on the ground of their being अमन्त (by the rule 'जनीजृष्—' (188)). Thus कामयते etc without ह्रस्वः। शमो दर्शने' (ग सू. 192). 'It is not मित्, though अमन्त, in the sense of 'seeing'. Thus निशामयति—(sees). But it is मित् in other sense (i. e. in the sense of 'hearing') as—प्रनयिणो निशमय्य (hearing) etc. Then how to explain 'निशामय तदुत्पत्तिम् etc.? 'hear of me who am speaking in detail, the origin of the same?' Take it as an application of the चुरादि 'शम—आलोचने' (to discuss). Roots being of various implications, it will mean here 'to hear' as in the case of शम उपशमे (दिवादि) which gives the sense of 'seeing'

here in मित्वविधि। 'यमोऽपरिवेषणे' (ग. सू. 193).—The root यम is not मित् when it means other than 'taking food or better distributing food to". Thus आयामयति—'lengthens or appoints. In the sense of distributing food, however, it becomes मित् as यमयति etc. Expressions like पर्य्यवसितं नियमयन् 'restricting the conclusion' etc are to be explained with णि (णिच्) attached to the word नियमवत्। [नियम (नि—यम्+अप् (भावे) +मतुप्। Then after the disappearance of मतुप् by 'णाविष्ठवत्प्रातिपदिकस्य' (2020) and the addition of णिच्, the form will be नियमि। This नियमि will be considered as a root by 'सनाद्यन्ता धातवः'. Thus नियमि+शप्+तिप्=नियमे+अ+ति=नियमयति (गुण and अयादेश) in शतृ=नियमयत्। But this explanation is modified by Nagesha (See the 'Tika'). 'स्खदिर् अवपरिभ्याञ्च' (ग. सू. 194)—The root स्खद् is not मित् when preceded by अव and परि। Thus अवस्खादयति परिस्खादयति etc. This rule is read by the न्यासकार as 'स्खदिर् अपावपरिभ्यः' meaning there by that स्खद is not मित् when it is preceded by अप also—अपस्खादयति। स्वामी does not carry the word न (unlike to what we have done), occurring in the गणसूत्र 'न कम्यमिचमाम्' (191) to the last three rules 'शमो दर्शने' (192), 'यमोऽपरिवेषणे'—(193) and 'स्खदिरवपरिभ्याञ्च' (194). Moreover, he disjoins the rule 'शमो दर्शने' (192) as शमः, दर्शने and adds that यम in a sense other than distribution of food is मित्। Hence in his opinion the form नियमयन् in 'पर्य्यवसितं—' is alright. He also introduces a नियम or restriction here viz. 'If the root स्खद is मित् with उपसर्गs prefixed, then it is मित्

onlywhen it is preceded by अव and परि only and consolidates his point by taking 'प्रखादयति' as a counter evidence. Thus, in his exposition, there is (an obvious) contradiction regarding the examples and counter-examples of the two rules 'यमोऽपरिवेषणे' (193) and 'खदिरवपरिभ्याश्च' (194). (For he says that यम् is अपरिवेषने मित् and forwards the illustration 'आयमयति' against the counter-illustration 'नियामयति ब्राह्मणान्' and in the next rule he says that खद is मित् with only अव and illustrates his point by giving the forms अवस्खदयति परिस्खदयति against the form प्रखादयति। But in reality such comments are contradictory to the drift of the rules). Besides, this opinion (of his) is contrary to the Viritti and Nyasa etc. Hence it should be rejected.

फण—to go. Here there is no possibility of the अनुवृत्ति of 'न', occuring in the rule 'न कमि—etc' (191) for फण is first to be made मित्। So the मित्संज्ञा only comes and the 'न' ceases to do so; and we have taken it (फण) here for the sake of its conjugation, which had we taken फण before 'न कमि etc.' would reach कमिचमि etc also which is impossible and absurd.

मित—। अथ फणान्ता इति—फण (८२१) गताविल्यन्ता इत्यर्थः। घटादि वयोदश—अनुदात्तेत: आत्मनेपदिनो गताः। इदानीम् षट्चत्वारिंशत् परस्मैपदिन उच्यन्ते। ज्वर रोगे—ज्वरति इति भ्वादित्वाद्रूपम्—मित्त्वात्—स्वार्थे णौ ज्वरयति अज्वरि = अज्वारि (चिण्); ज्वरं—ज्वरम्। ज्वारं—ज्वारम्—(णमुल्) इति रूपाणि बोद्धानि। एवमग्रेऽपि बोध्यम्। हेड् इति—एतद् भ्वादौ प्राक् टवर्गान्तेषु

पठितम्। स एव 'हेडृएव' उत्सृष्टानुबन्धः अनुबन्धेन ऋकारेण उत्सृष्टः परित्यक्तो विहीन इति यावत् अनूद्यते' पुनः पठ्यते अर्थविशेषे 'वेष्टनरूपे' मित्त्वार्थम् मित्—संज्ञार्थम्। 'तन्मध्ये'—ज्वरादिमध्ये अनुवादसामर्थ्यात्—पुनरुक्तिबलात्—ज्वरादिवदेतस्यापि परस्मैपदित्वमिति भावः। हेडति इति श्वादौ। हिडयति इति—मित्त्वाद् ह्रस्वः। 'एच इग् ह्रस्वादेशे' इति इत्वम्। अहिडि—अहीडि (चिणि—'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (२७६२) इति दीर्घविकल्पः)। अनादरे त्विति—मित्त्वाभावाद् ह्रस्वाभावः। वेष्टनरूपार्थे एव मित्त्वमिति भावः। इत्यमेव एव वृत्ताविव्येव। पूर्व्वम्—३१० संख्यक धातुरूपेण—'ह्लान्त—' (२२९९) इतिसूत्रस्याधस्तादिति। तत् 'तयोः श्वादिघटाद्योः' अयम् एष विवेकः विशिष्टं ज्ञानम्। अयं भावः—अर्थान्तरेऽसति मित्त्वं न स्यात्। अयञ्च धातुः पूर्व्वार्थे एवापि पठ्यते। अत एव भेदं विवक्षुराह—तत्रायमिति। पूर्व्वं पठितस्य भ्वादिगतस्य। यत्कारिषु—यस्य (नाट्यस्य) कारिषु (कर्तृषु) नटव्यपदेशः 'अयं नटः' इत्याख्या भवति। नाट्यस्यार्थमाह—वाक्यार्थाभिनयो नाट्यमिति—तत्तच्चेष्टेङ्गितादिभि र्वाक्ये यत्र अर्थस्य नाटकीयवस्तुनः बोधो भवति तन्नाट्यम् इत्यर्थः। घटादौ त्विति—मित्वं-ज्ञस्य—पुनः नृत्यम् नृत्तमिति चार्थः। यत्कारिषु—यस्य नृत्यस्य—नृत्तस्य न कारिषु—कारकेषु—नर्त्तकव्यपदेश 'नर्त्तकोऽयमिति नाम भवति—इति पूर्व्वपरयोर्भेदः। नृत्यस्यार्थमाह—पदार्थाभिनय इति। पद्भ्यां पदेन वा कलानैपुण्यात् यत्र अर्थावबोधो भवति तन्नृत्यम् इति नाट्यनृत्ययोर्भेदः। अथ नृत्तस्यार्थमाह—गात्रविक्षेप इति करशिरोवक्षसां मनोहारितया सञ्चालनम्। णट नृत्तौ इत्यस्य णोपदेशत्वं—दर्शयति। णोपदेश—पर्य्युदास वाक्ये—इति—'णो नः' (२२४६) इति सूत्रस्य अधस्तात्—'अनर्द्दनाटि' इति भाष्योक्तेः पर्य्युदासतया इत्यर्थः। प्रणटति—प्रणटयति इत्यादि रूपम्। चक तृप्तौ—प्रतीघाते चेति पूर्व्वं पठितः। तत्र अनुवादसामर्थ्यात्—तृप्तावेव मित्त्वं न प्रतीघाते इत्याह—तृप्तिप्रतीघातयोरिति। आत्मनेपदित्वमिति—स्पष्टम्। चकति—चकयति इत्यादि; प्रतीघाते तु चाकयति। एदित्वान्नवृद्धिरिति—'ह्म्यन्तक्षण—' (२२९९) इति निषेधात्। मित्त्वात् णौ—कखयति रगयति इत्यादि

यथापूर्व्वं बोध्यम्। कगे नोच्यते इति। नोच्यते न उच्यते मया—अर्थयोजकेन। अस्य सामान्येन क्रियावाचित्वात् विशेषार्थबोधकत्वासम्भवात् इत्याह—अस्यायमर्थ इति। अन्ये त्वनेकार्थत्वादिवमुक्तमित्याहुः। कगयतीत्यादि। अथ अर्थेति हिंसार्थेषु क्रथं विधत्ते—'जासिनिप्रहण—' (६१७—२।३।५६) इति। क्राथेति। अत्र सूत्रे क्राथेति निर्द्देशादित्यर्थः। मित्त्वेऽपि मित्त्वेन ह्रस्वविधानस्यौचित्येऽपि वृद्धिर्निपात्यते 'मितां ह्रस्व' (२५६८—६।४।९२) इत्यस्य बाधितत्वेन अप्रवृत्तेरिति भावः। मित्त्वन्तु इति। निपातनात्—'जासिनिप्रहण—' (२।३। ५६) इति सूत्रात्—परत्वात्—परवर्त्तित्वात्—'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (२७६२—६।४।९३) इत्यनेन चिणि णमुलि च चरितार्थम् सिद्धम्। अयं भावः। यद्यपि 'जासिनिप्रहण—' (२।३।५६) इत्यपेक्षया—'मितां ह्रस्वः' (६।४।९२) इत्यपि परम्—न तु केवलम् 'चिण् णमुलोः—' (६।४।९२) इत्येव तथापि 'पुरस्तादपवादा—अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति परिभाषया पुरस्तादपवादो 'जासिनिप्रहण—(२।३।५६)इति—अनन्तरस्य अव्यवहितस्य—निकटवर-वर्त्तिन इत्यर्थः—मितां ह्रस्वः (६।४।९२) इत्यस्यैव बाधकः—न तु 'चिण्णमुलोः—' इत्यस्यापि—तस्य व्यवहितत्वादुत्तरवर्त्तित्वाच्च। तेन क्राथयति इति अपि ह्रस्वः, चिण्णमुलोस्तु—अक्रथि—अक्राथि, क्रथं—क्रथम् क्राथं—क्राथमिति पूर्व्ववत् रूपम्।

वन चेति—अर्थमाह—हिंसायामिति। अयं धातुर्वन शब्दे संभक्तौ च इति' देवौ जगोः' (२३१८) इति सूत्रस्यान्ते पठिष्यते। अत्र हिंसायां मित्त्वार्थोऽनुवादः। वनति—वनयति। अवनि = अवानि। वनं—वनम्—वानं—वानम् इति। वनु च नोच्यते इति। अयं भिन्न एव धातुर्न तु तनादौ 'वनु याचने' इत्यस्यानुवादः। कुतो-नेत्यत आह—उदित्करणसामर्थ्यादिति। यदि ह्ययं तानादिक एव स्यात्—तर्हि 'वन च नोच्यते' इत्येव ब्रूयात्—न तु 'वनु चेति' उदित्तया। तनादावेव हि उदित्करणा-दक्त्वापुदित्वमादाय—क्त्वा प्रत्यये—इड्विकल्पस्य—निष्ठायामिट्प्रतिषेधस्य च सिद्धेः पुनरिहोदित्करणं व्यर्थम्। अत उदित्करणमस्य अपूर्व्वत्वस्यैव ज्ञापकमिति भावः। तेन तनादावनन्तर्भूतत्वेन क्रियासामान्ये (याचनादिविशेषार्थाभावे) वनति—प्रवनयति इत्यादि। ... वानयति इत्यादौ च। अनुपसृष्टस्य इति—उप-

सर्गरहितस्य—घटादिवर्णौ: मित्त्वविकल्पः—वनयति—वानयति इत्येवं रूपं—वक्ष्यते 'ग्लास्नावनुवमां च' (१९०) इति गणसूत्रे इत्यर्थः। ज्वल दीप्ताविति—णप्रत्ययार्थे पठिष्यमाणः 'ज्वलितिकसन्तेभ्यो णः (२९०२) इति कृत्सूत्रे इत्यर्थः। इह घटादौ—मित्त्वार्थम् अनूद्यते, पुनरुच्यते। 'ज्वलति मयि दारुणो मादकवनानलो—' इति जयदेवः। 'अथ ज्वलति तस्मिन् शमीकोटरे--' इति पञ्चतन्त्रम्। णौ—ज्वालयति। उपसृष्टात्—तु प्रज्वलयति इति। चिणि अज्वलि—अज्वालि। णमुलि—ज्वलं ज्वलम् ज्वालं—ज्वालम् इति।

स्मृ आध्याने इति। स्मृ चिन्तायामित्यग्रे वक्ष्यते। तत्रस्यस्यैव आध्यानरूपे विशेषार्थे मित्त्वार्थमिहानुवादः। तदेवाह—चिन्तायामित्यादि। आध्यानस्यार्थमाह उत्कण्ठेति। दॄ भये। क्र्यादौ त्वयं दॄ विदारणे इति पठिष्यते। धातूनामनेकार्थत्वादिहायं मित्त्वार्थमनूच्यते इत्याह। दॄ विदारणे इति। अत्र हेतुमति णिजिति दृष्टान्तयति—दृणन्तमिति दृधातोः क्र्यादित्वाद्धवन्तम्। दरयति भीषयते इत्यर्थः। क्र्यादौ तु दृणाति इति। भयादन्यत्रेति—विदारणार्थे इत्यर्थः। दारयति—इति तत्र मित्त्वाभावाद् दीर्घः। धात्वन्तरमेवेदमिति। अपूर्व एवायं न क्र्यादिरिति मते इत्यर्थः। भ्वादौ पाठात्—दरति इत्यादि (शप्तिपौ गुणश्च)। केचित्—पुनरिमं दृधातुं इह घटादौ, 'अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् (२५६६) इति सूत्रे च उभयत्रैव दृ इति ह्रस्वं पठन्ति। तन्नेति। माधवस्तु तत्पाठं नानुमन्यते। तत्र माधवस्यायं भावः—'यद्ययं ह्रस्वान्त एव भवेत्तर्हि—'शॄदॄप्रां ह्रस्वो वा' (२४९५) इति ह्रस्वविधायके सूत्रे दीर्घग्रहणमनर्थकं स्यादि'ति। नॄ नये इति। स्पष्टम्। नॄणाति—नरयति। अनरि—अनारि। नरं—नरम्। नारं—नारम् इति रूपाणि। नयभिन्नार्थे—मित्त्वाभाव इति दर्शयति। नारयति इति।

श्रा पाके इति—। एतेन धातुद्वयं सामान्येन अनुक्रियते। तत्र एकः 'श्रै पाके' (९१९) इति भ्वादौ पठ्यते। अपरस्तु 'श्रा पाके' (१०५६) इत्यदादौ। ननु 'श्रै' इत्यस्य एजन्तत्वात् कथं सामान्येन ग्रहणं तत्राह कृतात्वेति। 'आदेच उपदेशेऽशिति' (२३७०) इति निर्देशात्। आत्वादिकार्यमिति—अदादौ

पठ्यमानस्य । नन्वेवं सामान्येनानुवादस्य किं प्रमाणं तत्राह—'लुग्विकरण—' प्रारभ्य—इति परिभाषाभ्यामित्यन्तेन । तत्र प्रथमा ( परिभाषा ) स्वमते 'स्वरति—सूति—' इति ज्ञापकसिद्धा—अपरा तु सर्व्वेषामपि मते न्यायसिद्धा ।

अथ प्रथमार्थः—यद्येवं भवति, यत् य एव धातुर्लुग्विकरणे ( अदादौ ) पठितः पुनः स एव धातुरलुग्विकरणे ( भ्वादौ अन्यत्र वा गणे ) अपि पठित इति, तर्हि तत्र लुग्विकरणस्थं धातुं विहाय अलुग्विकरणस्य एव धातुर्ग्राह्यः । यथं सिद्धं क्तात्वस्य अं इत्यस्य भौवादिकस्य ग्रहणम् तस्य अलुग्विकरणत्वात् (शबादयो विकरणा येषां न लुप्यन्ते अदादीनामिव ( 'अदिप्रभृतिभ्यः शपः' लुक् ) तत एवात्र अलुग्विकरणत्वेनाऽऽदिं विहायान्येऽलुग्विकरणाः) । अथ द्वितीयार्थः—लक्षणञ्च प्रतिपदञ्चेति द्वन्द्वः । ताभ्यामुक्तयोरिति विग्रहः । तत्र लक्षणोक्तं विलम्बितोपस्थितिकम्—प्रतिपदोक्तं तु शीघ्रोपस्थितिकमिति नागेशः । एवञ्च शीघ्रोपस्थितिकस्यैव प्राग्ग्रहणं लोकन्यायसिद्धम्—यथा संस्कृतासंस्कृतभक्ष्ययोः संस्कृतस्यैव प्राथम्येन स्वीकारस्तद्वत् यथा वा चिप्राचिप्रगमनयोः चिप्रगमनेनैव ग्रहणम् तथा चादादौ पठितस्य आ इत्यस्यैव ग्रहणं भवेत् शीघ्रोपस्थितिकत्वात्, न तु भ्वादिपठितस्य ऐ इत्यस्य तस्य आत्वविधानेन विलम्बोपस्थितिकत्वात् । एवञ्च द्वयोरपि पौनरुक्त्यं सिद्धम् । अतएवाह—सामान्येनानुकरणमिति । मित्वमेवोदाहरति । ग्रपयति इति—'अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ (२५७०—७ ३ ३६ )' इत्याकारान्तानां पुङ्निर्द्देशात् पुक् । 'मितां ह्रस्वः' इत्युपधाह्रस्वः । पाकभिन्नार्थे तु ह्रस्वं नेति प्रत्युदाहरति—श्रापयति इति ।

'मारणतोषणनिशामनेषु ज्ञा'—मित् इति शेषः । चक्षुर्विषयकमेव ज्ञानं निशामनम् इति माधवमतम् । दर्शनमिति तदर्थः शमो दर्शने इति वक्ष्यमाणगणसूत्रात् । एष्वर्थेषु—निशानेषु इति । हरदत्तादिसम्मतोऽयं पाठ इति स्वयमेव वक्ष्यति । मारणतोषणनिशामननिशानेषु इत्यर्थः । जानातिरिति—ज्ञा मित् ; तेन 'पशुं संज्ञपयति ( मारयतीत्यर्थः ) । विष्णुं विज्ञपयति ( तोषयतीत्यर्थः ) । रूपं संज्ञपयति—( माधवमते दर्शयति मतान्तरे तु ... ) प्रज्ञपयति शरम् ( तीक्ष्णी-

ज्ञीकरोतीत्यर्थः)। ननु निशामनस्य ज्ञापनमात्र एवार्थः न चाक्षुषज्ञानम्। अन्यथा कथं 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' (५७२।१।४।३४) इति सूत्रे ज्ञीप्स्यमान इत्यत्र वृत्तिकृता 'बोधयितुमभिप्रेतः' इत्येवार्थः स्वीकृतः स्वयञ्च स एवानुसृत इति चेत्। तत्राह—'ज्ञप मिच्च' इति, चौरादिकोऽयं धातुः। ज्ञापनमारणे च तस्यार्थौ। तेन ज्ञीप्स्यमान इत्यादौ वृत्तिकृदादिवचनं सङ्गच्छते इति भावः। ननु तर्हि मित्त्वाद् ह्रस्वविधौ, कथं विज्ञापना ज्ञापयति इत्यादिषु दीर्घोऽपि इत्यत्रे तत्राह। नैते ज्ञपे रूपे किन्तु जानातेरेवेति गृहाण। ननु तदपि कथम्। तत्राह—माधवमते इति। अचाक्षुषज्ञाने इति। ज्ञानसामान्ये मित्वं नेति तदर्थः। तेन मित्वाभावाद् दीर्घः सिद्ध एव इति। ननु तर्हि ज्ञापनमात्रमेवार्थ इतिवादिनां का गतिस्तत्राह—ज्ञापनेति। ज्ञा नियोगे इति चुरादौ पठितस्यैवेमे रूपे भविष्यतः। नन्वेवं दीर्घः सिद्ध्यति। अर्थस्तु भिद्यते। नियोगार्थकधातोर्ज्ञापनरूपवृत्तिकत्वाभावादिति चेत्। न। धातूनामनेकार्थत्वादुक्तार्थासिद्धेः। इदानीं हरदत्तमतं समाधत्ते—निशानेषु इति। अनुपपत्तिरसाङ्गत्यं नेति भावः। तेषां मते मारणतोषणनिशानेष्वेव हि ज्ञाधातोर्मित्वं। ततश्च फलितं यत् मारणतोषणनिशानभिन्नार्थे ज्ञापनादिरूपे नायं मित् इति। एवञ्च विज्ञापना,—विज्ञापयति (भाष्यवचनमेतत्) सम्यगेव। माधवमते तु रूपद्वयं बोध्यम्। चाक्षुषज्ञाने ज्ञपयति इति अचाक्षुषज्ञाने तु ज्ञापयति इति। चिणि चाक्षुषज्ञाने—अज्ञपि—अज्ञापि; णमुलि—ज्ञपं—ज्ञपम्—ज्ञापं—ज्ञापम्। अन्यत्रोह्यम्। 'अत्र माधवमतमेव न्याय्य' इति नागेशः।

कम्पने चलिरिति। इकानिर्देशः। मित् इति सम्बद्ध्यते। चालयति इति कम्पनभिन्नार्थे मित्त्वाभावात्। छदिर् ऊर्ज्जने मित्। ऊर्ज्जनं प्राणनं बलाधानं वा तस्य मूलं दर्शयति छद अपवारणे इति। चुरादौ पठिष्यमाणस्य छद अपवारणे त्यस्य ऊर्ज्जनरूपेऽर्थे मित्करणार्थं मिद्धानुवादः। स्वार्थे णिभजावे इति। 'आधृषाद्वा' इति चुराद्यन्तर्गणसूत्रेण येषां हेतुमति णिच् प्राप्तः त एवात्र मित्त्वार्थमनुद्यन्ते छदस्तत्रान्तर्भुक्तः। अतस्तस्यापि हेतुमण्णिचि मित्त्वार्थमनुवादः फलति। ननु छदधातो

रपवारणार्थकस्य—ऊर्ज्जनार्थे, कथं वृत्तिस्तत्राह—अनेकार्थत्वादिति। हेतुमत्त्वमेव दर्शयति छदन्तमित्यादिना। अन्यत्रेति अपवारणार्थे इत्यर्थः। छादयति इति तत्र मित्त्वाभावाद् दीर्घः। हेतुमण्णिच्येवैषां मित्त्वम् 'नान्ये मितोऽहेतौ' इत्युक्तत्वात् अतः स्वार्थे णिचि मित्त्वं मा भूदिति प्रत्युदाहरति स्वार्थणिचि त्विति। जिह्वोन्मथने लड़िरिति। एतदर्थेऽयं मिदिति शेषः। कस्यायमनुवाद इत्याकाङ्क्षायामाह लड़ विलासे इति। भ्वादौ टवर्गीयान्तेष्वयं पठितः। 'जिह्वोन्मथने'—इत्यस्य अर्थं व्याकरोति। उन्मथनं चोभनमिति। ज्ञापनमिति तु तत्त्वबोधिनीसम्मतः पाठः। लड़यति जिह्वामिति—जिह्वां ज्ञापयतीत्यर्थ इति तत्त्वबोधिनी। रसनां रसान् ज्ञापयतीत्यर्थ इति तु बालमनोरमायाम्। तृतीयेति। जिह्वया उन्मथनम् इति तृतीया तत्पुरुषो वा समासः। लड़यति जिह्वया तया पदार्थान्तरं ज्ञापयति। अन्येति। तद्व्यापारः तस्याः जिह्वाया व्यापारः भाषणादिकमित्यर्थ। तन्मते उभयो—र्जिह्वोन्मथनयोरैक्यात् समाहारद्वंद्वः जिह्वाचोन्मथनश्चेति। लड़यति शत्रुमिति परुषपदप्रयोगपुरःसरं स्पर्द्धते इत्यर्थः। गालयति इति नागेशः। लड़यति दधि इति मथ्नातीत्यर्थः। लाड़यति पुत्रमिति शर्करादिदानेनानुकूलयति क्रीड़यतीति वेत्यर्थः।

मदीति। दैवादिकस्येति न तु भौवादिकस्येत्यर्थः। मादयति इति न तु मदति इति। णौ तु मदयति इत्यादि पूर्ववत्। अन्यत्रेति—हर्षग्लेपनभिन्नार्थे इत्यर्थः। भाव्ययमिति। अयं ध्वनधातुर्ज्वलादौ पठिष्यमाण इत्यर्थः। अन्यत्रेति—शब्दव्यतिरिक्तार्थे मित्त्वं नेत्यर्थः। ध्वनिरणी उदाहृतौ इति। ध्वनि तु [ ध्वन शब्दे इतीदानीमेवोक्तः। रणिस्तु कण रण गतावित्यत्र। गतौ इति भ्वादौ पठिता इत्यर्थः।' चै चये इति। वक्ष्यमाणस्य वक्तुम् इष्टस्य कृतात्वस्य—'आदेच उपदेशेऽशिति—(२३७०) इति सूत्रेणेत्यर्थः एवमात्वे कृते 'अर्त्तिह्री—' पूर्वोदाहृतसूत्रेण पुगानिर्देशः। इदं 'दलिवलि—' इति भोजपाठनिर्द्दिष्टस्य चपेरुपसंख्यानम्। स्वन इति—अवतंसनमलङ्करणम्। पठिष्यमाणस्येति घटादिगणादूर्द्ध्वं स्वन शब्दे इति पठिष्यमाणस्य अवतंसनार्थे मित्त्वार्थोऽनुवाद इत्यर्थः। अन्यत्रेति—अवतंसन-

भिन्नार्थे इत्यर्थः। इदानीं घटाद्यन्तर्गतगणसूत्राण्युद्धृत्य क्रमेण व्याख्यायन्ते—'घटादयो मित' इत्यारभ्य। 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' ( १८८ ) इति। मित इत्यनुवर्तते इति 'घटादयो मितः—इत्यत इत्यर्थः। तत्र जनी प्रादुर्भावे ( दिवादि )—जनयति। जृष् वयोहानौ षित्वसामर्थ्याद्दिवादिरित्याह—जीर्यतेर्य हणमिति। जॄ वयोहानौ इति क्र्यादेस्तु नेति दर्शयति जृणातेस्त्विति। क्नसु ( क्नस् ) ह्वरणदीप्त्योः ( दिवादिः ) क्नसयति। रञ्ज रागे अयं दैवादिकः भौवादिकश्च। 'रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः' इति 'वा चित्तविरागे' ( २६०५ ) इति सूत्रस्थवार्त्तिकात् मृगयार्थे रजयति मृगान्। अन्यत्र तु रञ्जयति पक्षिणः। अत्र नलोपो न। अमन्तास्तु क्रमिगमि-रम्यादयः। अम् अन्ते येषामिति विग्रहः। क्रमयति। गमयति। रमयति। केचित्त्विति। 'जनीजृष्क्नसु—' इति गणसूत्रस्य—जृषःस्थाने जॄ इति क्नसुस्थाने क्षमु इति पठन्तीत्यर्थः। तथा च क्नसयतिस्थले क्षमयति इति वदन्तीत्यर्थः।

'ज्वलह्वलह्मल—' ( ग. सू. १८९ )—अयमर्थः—प्रागुपसर्गेऽसति ज्वल-ह्वल ह्मल-नमां मित्त्वं वा स्यादिति। तत्र ज्वल-ह्वल-ह्मल इति त्रयाणां घटादौ पाठात्—नमेश्च 'जनीजृष—' ( १८८ इति गणसूत्रेण—अमन्तत्वात्—इदं विकल्पवचनं तदाह-प्राप्तविभाषेयमिति। 'प्राप्तस्य' मित्त्वस्य 'विभाषा' विकल्प इति तदर्थः। ज्वलयति—ज्वालयति। ह्वलयति—ह्वालयति। ह्मलयति—ह्मालयति। नमयति—नामयति। अनुप-सर्गादिति पर्युदासेन उपसर्गसद्भावे नित्यं मित्त्वमित्याह उपसृष्टे त्विति घञन्तादिति-प्रोपसृष्टाद् ज्वलतेरुत्तरं भावे घञ विधाय—'तत्करोति—' इति गणसूत्रेण प्रज्वालं करोति आचष्टे वेत्यर्थे—णिचि टिलोपे गुणे रूपम्। एवम् उन्नामयति। कथं तर्हीति—सोपसृष्टस्य क्रमतेर्मित्त्वाद् दीर्घाप्राप्तेः पूर्वोक्तप्रकारेण—घञि च वृद्धिनिषेधात्-'नोदात्तोपदेशस्य मान्तस्यानाचमेः' ( २७६३—७।३।३४ ) इति वृद्धिनिषेधात्-'क्राम' इत्येवं रूपाभावे प्रश्नः। व्यवस्थितविभाषाश्रयणादिति—'व्यवस्थित विभाषयापि कार्याणि क्रियन्ते' इति परिभाषया ( परि ९९ ) इत्यर्थः। व्यवस्थितं प्रयोजनवशात् विभाष्य विकल्प्य इत्याद्यर्थः। तेन नित्यविधिरपि प्रयोजनवशात् क्वचित् विभाष्यते

यथा—... क्वचित् पुनर्नित्यमपि विकल्पेन ... यथा—आक्रामत् ... स्फोटायनस्य

८८—६।१।१२३ ) इत्यवङ्—वैकल्पिकत्वेऽपि गवाद्यार्थं—नित्यत्वमेवेत्याहुः । इति णिलुगादिति—भाष्ये त्वेतद् न दृश्यते इति भावः । एतेनेति । 'व्यवस्थित-विभाषया क्वचित् कार्य्याणि क्रियन्ते' इति वचनेन । घुर्यान् इत्यादि रघुवंश-नवमसर्गस्थम् । अर्थः स्पष्टः ।

'ग्लास्नावनुवमाम् च' ( ग. सू. ( १९० ) ) इति । अपेक्षितं पूरयन् व्याचष्टे अनुपसर्गादिति । एषामिति ग्ला, स्ना, वनु, वम इत्येषां धातूनाम् इत्यर्थः । वेति-अनुपसर्गात् वा इति पूर्व्वसूत्रादनुकृष्यते । आद्ययोरिति—ग्लायतेः स्नातेश्च घटा-दित्वाभावादप्राप्तेरिति बोध्यम् । इतरयोरिति—वनुवमोरित्यर्थः । तत्र 'वनु च नोच्यते' इति घटादौ प्रागुक्तम् । वमतेस्तु अमन्तत्वात्— 'जनीजॄष—' ( १८८ ) इत्यनेन मित्त्वे प्राप्ते इदं विभाषावचनम् । उदाहरणानि तु—ग्लापयति—ग्लपयति (ग्लेति—ग्लै हर्षक्षये इत्यस्य कृतात्वेन निर्द्देशः )। स्नापयति—स्नपयति । वन-यति—वानयति । वमयति—वामयति । अनुपसर्गादित्येव प्रग्लापयति—प्रस्नापयति प्रवनयति इत्यादि ।

'न कम्यमीति' ( ग. सू. १९१ ) त्यस्य व्याख्यानं अमन्तत्वाद्रिति । 'जनीजॄष्—' (१८८ ) सूत्रे अमन्ताश्चेत्युक्तम् । तेषु अमन्तेषु—अम-कम-चम इत्येते मितो न । अत एव दीर्घः सिध्यति । कामयते इत्यादि रूपम् । शमो दर्शने ( ग. सू १९२ ) इति—शम इति 'शम . उपशमे' इति दिवादिरित्याह—शाम्यतिरित्यादि । अन्यत्रेति—श्रवणे इत्यर्थः । कथं तर्हीति—'निशमय' इति वक्तव्ये 'निशामय' इति दीर्घनिर्द्देशात् प्रश्नः । समाधत्ते—शम आलोचने इति चौरादिकस्य चुरादौ पठिष्यमाणस्य । ननु तथापि—आलोचनार्थकस्य धातोः कथमत्र श्रवणे वृत्तिस्तत्राह—धातूनामिति । शाम्यति—वदिति—यथा 'शम उपशमे' इत्युपशमार्थकस्य, दर्शने वृत्तिस्तद्वदित्यर्थः । 'यमोऽपरि-वेषणे—' ( ग. सू. १९३ )। भोजनतोऽन्यत्रेति भोजनभिन्नार्थे । वस्तुतस्तु—'परिवेषणं भोजनानुकूलः ( पात्रेऽन्नस्थापनादिरूपो— )व्यापार इति बोद्ध्यम्' इति—नागेशः । पर्य्यवसितमिति । परिवेषणभिन्नार्थेऽपि मित्त्वप्राप्तौ वचनम् । नियमवत् इत्यादिति नियमने नियमः यमः समुपनिषु च' ( ३३४० ) इति भावे अप्

प्रत्ययः। ततो मतुपि 'नियमवत्' इति जाते—'विन्मतोर्लुक्' (२०२०) इति मतुब्लुकि नियम इति स्थिते 'म मतुब्लोपे 'टिः' (१७८६) इत्यस्याप्राप्तौ वृद्धौ (सुक्) पुगापत्तिः (अर्त्तिह्री—इत्यादिनेत्यर्थः) नियमवत् इत्यर्थकार्यं आद्यजन्तनियमशब्दादि त्यर्थेनादोषात्—' इति नागेशः। एवं टिलोपे नियम इति जाते णिचि 'सनाद्यन्ता—' इति धातुत्वाच्छतरि गुणायादेशौ। ततो नियमयत् इति। खदिरवपरिश्याम् (ग. सू. १९४)। अवपरिपूर्व्वस्य सुखदेर्मित्वं नेति सूत्रार्थः। अत्र 'न कमि—' (१९१) इत्यतः नशब्दः 'शमो दर्शने' 'यमोऽपरिवेषणे' 'स्खदिरवपरिभ्यश्च' इत्यत्र सूत्रत्रयेऽनुवर्त्तते इति बोध्यम्। अवस्खादयति इति मित्त्वाभावात् दीर्घः। न्यासकार =जिनेन्द्रबुद्धिः। तन्मते अपपूर्व्वस्यापि स्खदतेर्मित्त्वं नेत्यर्थः। स्वामीत्विति। शमः+ अदर्शने इत्येवं सन्धिविच्छेदं कृतवान्, न तु शमः+दर्शने इति। तेनात्र नञनुवर्त्तनाभावेऽपि अर्थः समानः। यमस्तु इति—यमोऽपरिवेषणे इति—सूत्रे इत्यर्थः। मित्त्व माह—नञनुवर्त्तनाकरणादिति ज्ञेयम्। तथाच परिवेषणभिन्नार्थे यमो मित्त्वं स्वामिमते 'नियमयन्' इत्यत्र न काप्यनुपपत्तिः। तदेवाह—तन्मते इति। 'यमोऽपरिवेषणे' इति सूत्रे स्वामिना कश्चित् नियमोऽपि उद्भावित इत्याह—'उप-सृष्टस्य—सोपसर्गस्य स्खदेः सखदधातोश्चेत् यदि मित्त्वमिति शेषः तर्हि—अवपरिपूर्व्वस्यैव मित्त्वं नान्योपसर्गपूर्व्वस्येत्यर्थः। तमेव नियमं द्रढीकर्त्तुं प्रस्खादयति इति प्रत्युदाजहार। एवञ्च—स्वामिमते 'यमोऽपरिवेषणे' स्खदिरवपरिभ्याम् इत्युभयत्रैव उदाहरणप्रत्युदाहरणवैपरीत्यं फलितम्। तथाहि—

(१९३) सूत्रमते—परिवेषणभिन्नार्थे मित्त्वाभावात्, आयामयति।
स्वामिमते—तस्मिन्नेवार्थे मित्त्वात् आयमयति इति।
,, सूत्रमते—परिवेषणार्थे मित्त्वात् यमयति विप्रान्।
स्वामिमते—तस्मिन्नेवार्थे मित्त्वाभावात्—यामयति विप्रान् इति।

(१९४) सूत्रमते—अवपरिपूर्व्वस्य स्खदेर्मित्त्वाभावात् अवस्खादयति परिस्खादयति।
स्वामिमते—एतदुपसर्गद्वयपूर्व्वस्यैव स्खदेर्मित्त्वात्—अवस्खदयति परिस्खदयति।

(१८४) सूत्रमते—अनपरिभिन्नस्य सृखदेर्मित्त्वात्—प्रसृखदयति।
स्वामिमते—तादृशस्य सृखदेर्मित्त्वाभावात् प्रसृखादयति इति।

इति वैपरीत्यं स्पष्टमेव। तदेवाह—तस्मादित्यादि। व्यत्यासो वैपरीत्यम्। एतन्मतं प्रामाणिकग्रन्थान्तरविरुद्धत्वाद्धेयमित्याह—इदञ्चेति। वृत्तिःकाशिकावृत्तिकारमतम्। न्यासः जिनेन्द्रकृतः। उपेक्ष्यं हेयं परित्याज्यम्—'नियमयन्' इत्यादीनामस्मद्व्याख्ययापि सिद्धेरिति भावः। 'नियमयन्नित्यादेः सामञ्जस्येन अन्नमते (स्वामिमते) उपपत्तेः, तावेव (वृत्तिकारन्यासकारौ एव) उपेक्ष्यौ' इति कश्चित्' इति—शब्देन्दुशेखरे उक्तम्।

फण गताविति। अत्र घटादेर्निवृत्तिरिति वक्ष्यति फणां चेति व्याख्यानावसरे। न इति निवृत्तमिति। 'न कमि—' इत्यत्रोपात्तो नकार इति बोध्यम्। प्राप्तस्यैव हि निषेधः सम्भवति नत्वप्राप्तस्य। तेन फणगतावित्यत्र मित्संज्ञाया एव प्राप्तिर्न तु 'न' इत्यस्य, विधिनिषेधयोर्युगपत् प्राप्त्यसम्भवादिति। ननु तर्हि 'न कमि—' (१९१) इत्यतः प्रागेवेदं सूत्रं कुतो न पठितम्—तत्राह—फणादि (सप्तानां) कार्यानुरोधादिति। तत्रहुत्रक्तौ फणादिकार्य्यं कमिगम्यादीनपि स्पृशेदिति भावः।

२३५४। फणां च सप्तानाम् ॥६।४।१२५॥

दी—। एषां वा एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। फेणतुः। फेणुः। पफणतुः। पफणुः। फेणिथ पफणिथ। फणयति। 'वृत्'-घटादिः समाप्तः। फणिः प्रागेव वृदित्येके। तन्मते फानयतीत्येव। राजृ ८२२ दीप्तौ स्वरितेत्। राजति। राजते। रेजतुः। रराजतुः। रेजे रराजे। 'अतः' इत्यनुवृत्तावपि—विधानसामर्थ्यादात एत्वम्। टुभ्राजृ ८२३ टु भ्राशृ ८२४ टु भ्लाशृ ८२५ दीप्तौ। अनुदात्तेतः। भ्राजतेरिह पाठः फणादिकार्य्यार्थः पूर्व्वं पाठस्तु

भ्रष्ट्वादिषत्वाभावार्थः। तत्र हि राजिसाहचर्यात् फणादेर्ग्रहणम्। भ्रेजे—बभ्राजे। 'वा भ्राश' (२३२१) इति श्यन् वा। भ्राश्यते—भ्राशते। भ्रेशे—बभ्राशे। भ्लाशते—भ्लाश्यते। भ्लेशे—बभ्लाशे। द्वावपीमौ तालव्यान्तौ। स्यमु ८२६ स्वन ८२७ ध्वन ८२८ शब्दे। स्यमादयः चरत्यन्ताः परस्मैपदिनः। स्येमतुः—सस्यमतुः। अस्यमीत्। स्वेनतुः—सस्वनतुः। सस्वनुः। अस्वनीत्—अस्वानीत्। विष्वणति। अवष्वणति सशब्दं भुङ्क्ते इत्यर्थः। 'वेश्च स्वनः—' (२२७४) इति षत्वम्। फणादयो गताः। दध्वनतुः। षम ८२९ ष्टम ८३० अवैकल्ये। ससाम। तस्ताम। ज्वल ८३१ दीप्तौ। 'अतो ल्रान्तस्य' (२३३०)—(इति वृद्धिः)। अज्वालीत्। चल ८३२ कम्पने। जल ८३३ घातने। घातनं तैक्ष्ण्यम्। टल ८३४ ट्वल ८३५ वैक्लव्ये। ष्ठल ८३६ स्थाने। हल ८३७ विलखने। णल ८३८ गन्धे। 'बन्धने इत्येके। पल ८३९ गतौ। पलति। बल ८४० प्राणने, धान्यावरोधने च बलति। बेलतुः। बेलुः। 'पुल ८४१ महत्वे'। पोलति कुल ८४२ संस्त्याने बन्धुषु च। संस्त्यानं संघातः। बन्धु शब्देन तद्व्यापारो गृह्यते। कोलति। चुकोल। शल ८४३ हुल ८४४ पत्लृ ८४५ गतौ। शशाल। जुहोल। पपात पेततुः। पतिता।

एत्व and अभ्यासलोपः (the elision of the reduplicate) takes place in connection with फण्, राज्, भ्राज्, भ्राश, भ्लाश,

and खन, when the कित् लिट् and the affix थल् with इट् prefixed, follows. फेनतुः—फण् फण् अतुस्—० फण् अतुस्—फेण् अतुस् (by—'असंयोगाल्लिट् कित्' ( 2242 ) and 'अत एकहल्मध्ये—' ( 2260 )) राजति—राजते by 'स्वरितञित—' । अतः etc—Though there is अनुवृत्ति here of अत् ( अ ) from अतः एक—( 6. 4. 120 ), yet the आ of राज् will be changed to ए and the अभ्यास of the same will disappear on the authority of विधान or विधि injunction, i.e. the rule 'फणां च सप्तानाम्' । ( So though there is no अ in राज भ्राज etc yet they will have एत्व for their आ and the अभ्यास will vanish ). We have read here भ्राज to show the operation due to फणादित्व । And we read it before ( in एजृ भ्रेजृ भ्राजृ दीप्तौ ) to bring out that it might have the षत्व laid down in the rule 'व्रश्चभ्रस्ज—' (294—8. 2. 36). For there i. e. in षत्वविधि, this फणादि—भ्राजृ i. e. टुभ्राजृ is meant ( to have षत्व ) on account of its contact with राजि which also is फणादि । The drift is this :—In the rule व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' ( 294 ), by भ्राज is meant फणादि टुभ्राजृ on account of its contact with राजि and not भ्राजृ दीप्तौ read in चवर्गान्त roots under 'अभ्यासस्यासवर्णे' ( 2290 ). To show this we have read भ्राजृ and टुभ्राजृ separately. Thus टुभ्राजृ ( with षत्व ) gives विभ्राट् विभ्राड्भ्याम् etc. whereas भ्राजृ (without it ) gives विभ्राक् विभ्राग्भ्याम् etc. अस्यमीत्—लुङ् prohibition of वृद्धि by 'ह्म्यन्त—( 2299 ). अस्वनीत्—अस्वानीत्—option of इट्—by 'अतो हलादेर्लघोः' ( 2284 ). फणादयो गताः—here ends the फणादि class. ज्वल दीप्तौ—here ज्वलादि commences. Hence by 'ज्वलितिकसन्तेभ्यो णः'—ज्वालः—चालः etc.

मित—एषां फणादीनामिति—फण्, राज, भ्राज्, भ्राश, भ्लाश्, स्यम्, स्वन इति सप्तानाम्। फणामिति बहुवचनात्तदादीनां लाभः। वेति—'वा जॄभ्रमुत्रसाम्' (६।४।१२४) इत्यतोऽनुवर्त्तते। एत्वाभ्यासलोपाविति—'घ्वसोरेद्धावभ्यासलोपश्च (६।४।११९) इत्यतोऽनुवर्त्तनात्। किति लिटीति—'अत एकहल्मध्ये—' (६।४।१२०) इत्यतोऽनुवृत्तेः। सेटि थलि चेति—'थलि च सेटी'त्यतोऽ (६।४।१२१) नुवर्त्तनादिति बोध्यम्। फण् फण् अतुस्—असंयोगाल्लिट कित्—' इति लिटः कित्त्वादत एकहल्मध्यस्थत्वाच्च एत्वाभ्यासलोपे फेणतुरिति एवमन्यत्र। तन्मते इति। मित्त्वाभावादिति भावः। 'अत' इत्यनुवृत्तावपि इति। यद्यपि—'अतः एकहल्—' इत्यत्र 'अतः' इत्यनुवर्त्तते तथापि विधानसामर्थ्यात्—'फणां चेति' सूत्रकरणात्—'भाव' राज इत्यादेराकारस्यापि एत्वम् इत्यर्थ.। भ्राजतेरिति—भ्राज् धातोः। पूर्व्वमिति 'एज् भेज्, भ्राज्' इत्यत्र। व्रश्चादीति। 'व्रश्च-भ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति सूत्रे यद्भ्राजतेः षत्वं विहितं तत् 'वजॄभ्रेजृभ्राजृ' इत्यत्र पठितस्य भ्राजतेर्माभूदिति कृत्वा णौ भ्राजतिस्तत्र पठितः। ननु तर्हि कस्य भ्राजतेरनेन सूत्रेण षत्वविधानमित्यत्राह——राजिसाहचर्य्यादिति। व्रश्चादि-सूत्रे राजिरुपात्तः। स च फणादिः। तेन तत्संसर्गात् फणादेरेवभ्राजतेः षत्व-विधानं न भ्वादेः (एजृभ्रेजृ—इत्यत्र पठितस्य) इति। तेन फणादेर्भ्राजतः—विभ्राट्—विभ्राड्भ्याम् इत्यादि भवति, भ्वादेस्तु विभ्राक् विभ्राग्भ्याम् इत्यादि भेदः। ज्वल दीप्ताविति। अधुना ज्वलादिरारब्धः। स च फण गतौ (८३७) इत्यन्तो बोध्यः। तत्र समाप्तिज्ञापक 'वृत्'—शब्ददर्शनात्। 'ज्वलितिकसन्तेभ्यो णः'—ज्वालः—ज्वलः, चालः—चलः, इत्यादि कृत्सु वक्ष्यते। अथ पतेर्लुङि अङि पुमागमः स्यादित्याह—

## २३५५। पतः पुम ।७।४।१९॥

वृ—। अङि परे। अपप्तत्। 'नेर्गदनद—' (२२८५) इति णत्वम्। प्रण्यपप्तत्। क्वथे ८४६ निष्पाके। क्वथति

अकथीत्। पथे ८४७ गतौ। मथे ८४८ विलोडने। मेथुतः। अमथीत्। टु वम् ८४९ उद्गिरणे। इहैव निपातनात् ऋत इत्वम् इति सुधाकरः। ववाम। ववमतुः। वादित्वादेत्वाभ्यासलोपौ न। भागवृत्तौ तु वेमतुरित्याद्युपरदाहृतम्। तद्भाष्यादौ न दृष्टम्। भ्रमु ८५० चलने। 'वा भ्राश—' (२३२१) इति श्यन् वा। भ्रम्यति। भ्रमति। भ्राम्यति इति तु दिवादौ वक्ष्यते।

The augment पुम् ( प् ) comes after the root पत् when the affix अङ् follows. The root is पत्लृ ( लृदित् ) ; hence अङ् comes in by 'पुषादि—' ( 2343 ). And this पुम् or प being मित् attaches itself after 'प' of पत् by 'मिदचोऽन्त्यात् परः'। Thus अट् पत् अङ् तिप्—अप पुम् त्‌अत्—अप प्त् अत् = अपप्तत्। निष्पाक—means extraction or pounding अकथीत्—अपथीत्—( वृद्धि is barred by 'ह्मयन्त—(2299) ). टुवम्—उद्गिरणे—Well—how to derive the word 'उद्गिरण—' ? If we take it thus उद्—गृ + ल्युट्, it will give उद्गरण by 'सार्वधातुकार्धधातुकयोः' which being subsequent ( 7. 3. 84 ) bars the rule 'ऋत इद्धातोः' (239c—7. 1. 100 ). In answer to this he brings forward the explanation of सुधाकर who holds that it is formed irregularly in this very case. वम् being वादि i. e. having a व at the beginning is prohibited from having एत्व and अभ्यासलोप by 'न शसददवादिगुणानाम्' ( 2263 ). In Bhagavritti वेमतुः etc. are illustrated in places of ववमतुः etc ; but these instances are not found in भाष्य etc. Hence ववमतुः etc. should be taken as correct.

सित—। पत: पुम् इति—'ऋदृशोऽङि गुणः' (२४०६—७।४।१६) इत्यतः 'अङि' इत्यनुवर्त्तनादाह—अङि परे इति। 'मिदचोऽन्त्यात् परः' इति मित्त्वात् पकारात् परं प्रयोगः—अट् प पुम् त् अङ् ( 'पुषादि—' ( २३४३ ) ) तिप् अ पप् त् अङ् त्—अपप्तत्। ( पत्लृ—पत्—लृदित् )। अङो ङित्त्वात् 'क्ङिति' इति निषेधाद्—गुणाभावः। क्नथे इत्यादेरेदित्त्वात् 'ह्म्यन्त—' ( २२९९ ) इति वृद्धिनिषेधात् अक्नथीत् इत्यादि। टुवम् उद्गिरणे इति। टित्करणमथुजर्थम् ( ट्वितोऽथुच् ) वमथुरिति। ननु उद्गिरणमिति कथं सिद्धम्। ल्युटि हि 'ऋत इद्धातोः' ( २३६९ —७।१।१०० ) इतीत्वं बाधित्वा 'सार्वधातुका—' ( ७। २।८४ ) इत्यस्य परत्वाद् गुणे उद्गरणम् इत्येव युक्तं स्यात्। तत्र सुधाकरवचनं पुरस्कुर्वन्नाह—इदं अस्मिन्नेव स्थले (पाणिनीये प्रयोगे) निपातनात् साधुरिति शेषः। ववमतुरित्यत्र एत्वाभ्यासलोपौ नेत्याह वादित्वादिति। 'न शस—' ( २३६२ ) इत्यनेनैत्वाभावप्राप्तौ लिति। तत्र वमेः 'टु' इत्यंशं एवादित्वेन स्वीकृत्य वादित्वाभावात् वेमतुः वेमुरित्याद्युदाहृतम्। अस्ति च तादृशः प्रयोगः—वेमुश्च केचिद् रुधिरम् इत्यादि ( -चण्डी- )। तथापि प्रामाणिकग्रन्थे भाष्यादौ तथाविधोदाहरणाभावात् असाधु-रेवायं प्रयोग इति भावः।

## २३५६। वा जॄभ्रमुत्रसाम् ॥६।४।१२४॥

टी—। एषामेत्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च। भ्रेमतुः—बभ्रमतुः। अभ्रमीत्। क्षर ८५१ सञ्चलने। अक्षारीत्।

अथ द्वावनुदात्तेतौ। षह ८५२ मर्षणे। 'परिनिविभ्यः—' ( २२७५ ) इति षत्वम्। परिषहते। सेहे। सहिता। 'तीषसह—' (२३४०) इति वेट्। इडभावे ढत्वधत्वष्टुत्व—ढलोपाः।

एत्व and अभ्यासलोप come in optionally in the cases of जॄ

अम् and वस्, when a कित् लिट and a सेट् थल् i. e. the affix थल preceded by इट्, follow.

अथ द्वौ etc.—षह ( सह् ) to endure, forbear etc. षत्व comes in स of सह when preceded by परि नि and वि by the rule 'परि-निविभ्यः—' (2275) ; and इट comes in to it optionally where the affix त follow by the rule 'तीषसह—' ( 2340 ). Then when इट is wanting 'ह्' will be replaced by 'ढ' ('हो ढः') त by ध ('झषस्तथोर्धोऽधः' ( 2280 ) ), this ध again will make room for ष्टुत्व i, e. ढ, i. e. ध will have the substitute ढ for itself in as much as it ( ध ) comes after a ढ ( by the rule—ष्टुनाष्टुः (११३ ) ). This ढ ( i. e. the 2nd. ) will disappear by 'ढो ढे लोपः Then the penultimate of सह will be replaced by 'ओ' by the rule ahead :—

मित—। वा जॄ इति—पूर्ववदवाप्य त्वादिकं वोध्यम्। अभ्रमीत्—मान्तत्वादस्य अक्रमीत् इतिवत् 'ह्म्यन्तक्षण—' ( २२९९ ) इति वृद्धिनिषेधः। अचारीत्—'अतो लरान्तस्य' ( २३३० ) इति वृद्धिः।

अथेति—षह मर्षणे—'मर्षणं क्षमा सा चापराधे सत्यपि कोपानाविष्करण'—मिति शब्देन्दुशेखरः। परिनिविभ्यः—इति स्पष्टम्। इडभावे इति। हो ढ इति ढत्वम्। 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वम्। तस्य ढकारसाहचर्यात् 'ष्टुनाष्टु'रिति ष्टुत्वम् ( ढत्वम् ), तस्य ष्टुत्वप्राप्तस्य ढस्य 'ढो ढे लोपः' (२३३५ ) इति लोपः। अथ ततः सहतेरुपधास्थस्य अकारस्य ओद्विधानार्थमाह—

## २३५७। सहिवहोरोदवर्णस्य ॥६।३।११५॥

दो— । अनयोरवर्णस्य ओत् स्याद् ढलोपे सति।

The अ of सह and वह is replaced by ओ when the elision of ढ come about. Thus सह+ता=सढ्+धा=सढ्ढा=स्ओढा= सोढा।

मित—। स्पष्टम्। 'ढ्लोपे' (१७४—६।३।१११) इत्यतो ढकारमनुवर्त्याह—ढलोपे सति इति।

## २३५८। सोढः ॥८।३।११५॥

दी—। सोढ्रूपस्य सहेः षत्वं न स्यात्। परिसोढा।

The form सोढ् of the root सह् does not have ष for its स। Thus परिसोढा।

मित—। 'सहेः साडः सः' (२३५—८।३।५६) इत्यतः सः इति षष्ठ्यन्तं पदम् अनुवर्त्तते—'न परस्पिसृजि—' (३१६८—८।३।११०) इत्यतो नेति च। तदाह—सढेत्यादि।

## २३५९। सिवादीनां वाड्व्यवायेऽपि ॥८।३।७१॥

दी—। परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि। पर्य्यषहत्—पर्य्यसहत। रमु ८५३ क्रीड़ायाम्। रेमे। रेमिषे। रन्ता। रंस्यते। रंसीष्ट। अरंस्त।

अथ कसन्ताः परस्मैपदिनः। षद्लृ ८५४ विशरणगत्यवसादनेषु—।

The स of सिवु (सिव्), सह, सुट् (an augment in पारस्करादि) स्तु and स्वञ्ज coming after the उपसर्गs परि, नि, and वि becomes ष optionally even if the intervention of the augment अट् ('लङ्लुङ्लृङ्क्ष्वडुदात्तः') is present there. Thus परि अट सहत

—पर्य्यषहत etc. For. सिवादि—see rule—'परिनिविभ्यः—'( 2275—8. 3. 70 ).

अथ कमन्ताः etc.—षद्लृ ( सद ) षोपदेश and लृदित्—

मित—। सिवादीनाम् + वा + (अट्—व्यवाये ) + अपि—इतिच्छेदः । सिवादीनां सिवुसहसुट्स्तुस्वञ्जाम् परिनिविभ्यः परतो वर्त्तमानानां सकारस्य षत्वं वा स्यादडागमव्यवधाने सत्यपीत्यर्थः । पर्य्यषीव्यत्—पर्य्यसीव्यत् ( सिवु )। पर्य्यष्करोत्—पर्य्यस्करोत् ( सुट् )। पर्य्यष्टौत्—पर्य्यस्तौत् ( स्तु )। पर्य्यष्वजत—पर्य्यस्वजत ( स्वञ्ज ) इत्युदाहरणानि, एवं निव्यादियोगेऽपि बोध्यम् । रन्ता इति। रमेरुदित्वात् क्त्वायामिड्विकल्पेऽपि अनिट्- कत्वान्नेति माधवादयः। तेन रमित्वेत्यसाधुरेवेति बोध्यम् । रेमिषे—क्रादि—नियमादिट् । अरंस्त—लुङ् अनिट् । 'यमरम—' (२३७७) इति सगिटौ न। तस्य परस्मैपदेएव नियमात् ।

अथ फणान्ता इति षद्लृ—सद षोपदेशो लृदित् च। विशरणम्—अवयवानां विश्लेषः। अवसादनं नाशः। तस्य सीदादेशार्थमाह—

२३६०। पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥७।१।७८॥

दौ—। पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे। सीदति। ससाद। सेदतुः। सेदिथ—ससत्थ। सत्ता। सत्स्यति। लृदित्वादङ्—असदत्। 'सदिरप्रतेः' (२२७८)—निषीदति। न्यषीदत्।

पा etc. are replaced by पिब etc. in order when a श-eliding affix (as शप् etc.) follows. Thus सद is replaced by सीद and we have सद + शप् ति = सीदति, सेदतुः—by एत्वाभ्यासलोप ; लृदित्वात्—i.e. by पुषादि— (2343).

मित—। पा, घ्रा, ध्मा, स्था, म्ना, दाण् दृशि, अर्त्ति (ऋ गतौ), शर्त्ति ('सृ धातुः), शद सद एषां द्वन्द्वात् षष्ठीबहुवचनम्। पिब, जिघ्र, धम, तिष्ठ, मन, यच्छ, पश्य, ऋच्छ, धौ, शीय, सीद एषाम् द्वन्द्वात् प्रथमाबहुवचनम्। पादीनामेकादशानां स्थाने पिबादय एकादश यथासंख्यं स्युः शिति प्रत्यये परे। 'ष्ठिवुक्लमुचमां शिति' (२३२०—७।३।७५) इत्यतः शितीत्यनुवर्त्तते। ससाद —इति शबभावात् सीदादेशो नः। सेदतुः—'अतः एकहल्—' इति एत्वाभ्यासलोपौ। सेदिथ—ससत्थ—'उपदेशेत्वतः' (२२९५—७।२।६२) इति निषिद्धेऽपि—'तास्वनिट् थलि वेडयम्' इति भारद्वाजनियमाद् वेट्। तास्वनिट्—सत्ता। लृदित्वादित्यादि—स्पष्टम्। न्यषीदत्—'प्राक्सितादड्व्यवायेऽपीति षत्वम्। निपूर्व्वस्य सदेः अङि रूपमिदम्। निषसाद इत्यत्र—'स्थादिष्वभ्यासेन चाभ्यासस्य' (२२७७) इत्यभ्यासव्यवधानेऽपि अङ्गस्य सदः सस्य षत्वे प्राप्ते—

## २३६१। सदेः परस्य लिटि ॥८।३।११८॥

दी—। सदेरभ्यासात् परस्य षत्वं न स्याल्लिटि। निषसाद। निषेदतुः। शद्लृ ८५५ शातने। विशीर्णतायामयम्। शातनं तु विषयतया निर्द्दिश्यते।

The ष is not enjoined in place of the स of सद coming after the अभ्यास in लिट्। Thus निषसाद। This bars the षत्व enjoined by the rule 'स्थादिष्वभ्यासेन—' (2277). निषेदतुः by 'अत एकहल्मध्ये—' (2260) शद्लृ (शद)—लृदित्—to cause to cut off i. e. it means to turn into dust or powder and the expression 'causing to cut off', is mentioned by way of the subject-matter. The idea is—The author by saying 'शातन' 'to cause to cut' does not give here the meaning of the root

शद but he only intends to show that the root takes the 'हेतुमण् णिच्' in लुङ् (by the rule 'शदेरगतौ तः' (2598)).

मित—। सदेरित्यवयवषष्ठी सदेः सस्य इत्यर्थः। तदाह—सदेरित्यादि। पर शब्देनात्र अभ्यास आक्षिप्यते। तेन कुतः परस्य इत्याकाङ्क्षायामाह—अभ्यासात् इति। षत्वमिति। अपदान्तस्य मूर्धन्य इत्यतोऽनुवृत्तेः। 'न पर—' (२१३८) इत्यतो नस्यानुवृत्तिः। निषसाद—इति। शित्परत्वाभावात्—सीदादेशविरहः। निषेदतुः—'अत एकहल्मध्ये—' (२२६०) इत्येत्वाभ्यासलोपौ। शद्लृ—लृदित्—करणमङ्थम्। शद—इति शेषः। शातने इति न सम्यग्, अतः समाधत्ते विशीर्णतायामयम् इति। अयं धातुः शद इति यावत् विशरणार्थे वर्त्तते यथा—षद्लृ इति। ननु तर्हि कथमेवं सूत्रकारेण निर्दिष्टः। तत्राह—शातनं लिति। विषयतया व्यापारतया प्रयोजकव्यापारतया इत्यर्थः निर्दिश्यते उच्यते 'णुगति चास्मादपि हेतुमण्णिज् भवती'ति दर्शयितुमेवमुक्तमिति व्याख्यातुराशयः। वस्तुतस्तु शातनमित्यर्थनिर्देशोऽसङ्गतः। सकर्मकतापत्तेरिति शेखरे स्पष्टम्।

२३६२। शदेः शितः।१।३।६०॥

दो—। शिद्भाविनोऽस्मादात्मनेपदं स्यात्। शीयते। शशाद। शेदतुः। शेदिथ—शशत्थ। अशदत्। क्रुश ८५६ आह्वाने रोदने च। क्रोशति। क्रोष्टा। च्लेः क्सः। अक्रुक्षत्। कुच ८५७ सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। कोचति। चुकोच। वुध ८५८ अवगमने। वोधति। वोधिता। वोधिष्यति। रुह ८५९ वीजजन्मनि प्रादुर्भावे च। रोहति। रुरोह। रुरोहिथ। रोढा। रोक्ष्यति। अरुक्षत्। कस ८६० गतौ। अकासीत्-अकसीत्। वृत्। ज्वलादिगणः समाप्तः।

अथ गूहत्यन्ता: स्वरितेत:। हिक्क ८६१ अव्यक्ते शब्दे। हिक्कति-हिक्कते। अञ्चु ८६२ गतौ याचने च। अञ्चति-अञ्चते। 'अचु' इत्येके। 'अचि' इत्यपरे। टुयाचृ ८६३ याच्ञायाम्। याचति—याचते। रेटृ ८६४ परिभाषणे। रेटति—रेटते। चते ८६५ चदे ८६६ याचने। चचात। चेते। अचतीत्। चचाद। चेदे। अचदीत्। प्रोथृ ८६७ पर्य्याप्तौ। पुप्रोथ—पुप्रोथे। मिदृ ८६८ मेदृ ८६९ मेधाहिंसनयो:। मिमेद—मिमिदे। मिमेदे। धान्ताविमौ इति स्वामी। मिमेथ। धान्तौ इति न्यास:। मेधृ ८७० सङ्गमे च। मेधति। मिमेधे। णिदृ ८७१ णेदृ ८७२ कुत्सासन्निकर्षयो:। निनेद। निनिदतु:। निनेदे। शृधु ८७३ मृधु ८७४ उन्दने। उन्दनं क्लेदनम्। शर्धति—शर्धते। शर्धिता। मर्धति—मर्धते। बुधिर् ८७५ अवबोधने। बोधति—बोधते। इरित्वादङ् वा। अबुधत्—अबोधीत्—अबोधिष्ट। 'दीपजन—' (२३२८) इति चिण् तु न भवति। पूर्व्वोत्तरसाहचर्य्येण दैवादिकस्यैव तत्र ग्रहणात्। उबुन्दिर् ८७६ निशामने। निशामनं ज्ञानम्। बुबुन्दे। अबुदत्। अबुन्दीत्। वेणृ ८७७ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु। वेणति—वेणते। नान्तोऽप्ययम्। खनु ८७८ अवदारणे। खनति—खनते।

The root शद्‌ takes आत्मनेपद terminations—only when a शित् affix (such as शप् and शानच्) is to follow. Thus शद् + शप् + ते = शीय् (by 'पाघ्रा etc.' (2360)) + अते = शीयते। शशाद—लिट् not being

मित् there is no शोयादेशः। वृद्धि by 'अत उपधायाः' (2282). शेदतुः—एत्व and अभ्यासलोप by 'अत एकहल्—' (2260) शेदिथ—शशत्थ—option of इट् in थल by 'ऋतो भारद्वाजस्य' and उपदेशेऽत्वतः (2296—95). शत्ता (तास्यनिट्). अशदत्—अङ् because शद is लृदित्। कुश—अनिट्। च्लेः क्सः i. e. by 'शल इगुपधात्—' (2336) and क्स being कित् the penultimate, though short, is not gunnated by 'पुगन्त—' (2. 89. ). बुध—to know सेट्। बोधति etc—by लघूपधगुण। रोढ़ा—लुट् ता—by 'हो ढः', 'झषस्तथोर्धोऽधः', 'ष्टुनाष्टुः' and 'ढो ढे लोपः'। रोक्ष्यति—रुह + स्यति—रोह्स्यति—रोढ्स्यति—रोक् ष्यति ('षढोः कः सि')। अरुक्षत्—क्सः by 'शल इगुपधात्—' अट रुह क्स त्—अरुढ् स त्—अरुक् षत्—अरुक्षत्। अकासीत्—अकसीत् (लुङ्) option of वृद्धि by 'अतो हलादेर्लघोः'। वृत् i.e. here ends the ज्वलादि class.

अथ गूहत्यन्ता, i.e. up to गूहू (896) संवरणे (to hide). अचतीत्—चते being एदित् the rule 'ह्म्यन्तक्षण—' (2299) operates. थान्ता etc. i. e. स्वामी reads them as मिघृ. मेघृ and न्यास or Jinendrabuddhi reads as मिद्दृ मेद्दृ। इरित्वादङ्वा i. e. by 'इरितो वा' (2269). अबुधत्—(अङ्) अबोधीत् इट् (सिच् ईट्—सलोप); अबोधिष्ट—(सिच् इट त। Here ईट does not come in for त is not अपृक्त एकाल्)। The affix चिण् directed optionally to बुध by 'दीपजनबुध—' (2321) does not come in for this बुध is भ्वादि where as चिण् is enjoined to the दिवादि बुध only—on the ground of the interposition of बुध between two दिवादि roots जन and पूरि in that rule 'दीनजन etc.' उ बुन्दिर्—उ for option of इट् in क्त्वाच् and इर् for option of अङ् as अबुदत् (here न elides by 'अनिदितां (415)) and अबुन्दीत् (सिच इट्). खनु—(खन्) to dig :—

सित—। शित: श् इत् ( इत्संज्ञक: ) यस्यासौ 'शित्' तस्मादित्यत आह—शिद्भाविन: इति—'शित्भावी भविष्यन् यस्मादि ति विग्रह:। 'शदेश्शित् इत्यत्र' पूर्व्वं शितोऽसम्भवात 'शित' इत्यस्य तद्विषये लक्षणा' इति भाव:। तेन शिद्विषये इत्यर्थलाभ:। शदेरिति पञ्चम्यन्तम् तदाह—अस्मादिति। आत्मनेपदमिति—'अनुदात्तङित आत्मनेपद'मित्यतोऽनुवृत्ते:। शीयते—इति—'पाघ्रा ति—' ( २३६० ) शीयादेश:। शशाद—लिटि शित्त्वाभावाच्छीयादेशाभाव:। अत उपधाया ( २२८२ ) इति वृद्धि:। शेदतु:—एत्वाभ्यासलोपौ। शेदिथ—शशत्थ—भारद्वाजनियमाद् वेट्। शत्ता—तासि अनिट्। अशदत्—ऌदित्वादङ्, ङित्त्वाद् गुणाभाव:। अक्रुचत्—'शल इगुप—' ( २३३६ ) इति सिच: क्स:। कित्त्वाद् गुणाभाव:। अरुचत्—अङ्। अकासीत्—अकसीत्—अतो हलादेरितिवृद्धिविकल्पवत्—इत्यस्यार्थमाह—ज्वलादिरिति।

अर्थेति—गूहत्यन्ता गुहूसंवरणे ( ८९६ ) इत्यन्ता इत्यर्थ:। स्वरितेत—उभयपदिन इत्यर्थ:। चैते इति। एत्वाभ्यासलोपौ। एवं चेदे। अचतीत्—एदित्वान्नवृद्धि:। एवम् अचदीत्। पुप्रोथ इति। एच इगिति ह्रस्वादेश: मिमेथे—ए च इगिति ह्रस्वादेश:। एवं निनेदे! बुधिर् इति। इरित्करणप्रयोजनमाह—इरित्वादिति। 'इरितो वेत्य'नेनेत्यर्थ:। बुध अवगमने—बुधिर् तु अवबोधने इत्युभयोर्भेद:। अवगमनं ज्ञानम् अवबोधनन्तु ज्ञापनम् इत्यर्थात्। अबुधत्—ङित्त्वाद् गुणाभाव:। अबोधीत्—सिच्-इट्-ईट् सलोपा:। अबोधिष्ट—आत्मनेपदे सिचि इटि च रूपम्। अत उत्तरं चिण्नेष्यते इत्याह—दीपजनेति ( २३२८ ) पूर्व्वोत्तरसाहचर्य्यादिति। जनपूरीसाहचर्य्यादिति भाव:। दैवादिकस्यैव दिवादौ पठितस्यैव। उ बुदिर—उदित्करणं क्त्वायमिड्विकल्पार्थम्—इरित्करणन्त्वङ्‌र्थं अबुदत् इति अङि 'अनिदिताम्—' ( ४१५ ) इति नलोप:। सिच्पक्षे अबुन्दीत् इति। खनु—उदित् अतएव खनित्वा—खन्त्वा इति इड्विकल्प: चखान;— अतुसि तु—उपधालोप: स्यादि इत्याह—

२३६३। गमहनजनखनघसां लोप: क्ङित्यनङि ॥६।४।९८॥

दौ—। एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि। चख्नतुः। 'ये विभाषा' (२३१९)। खायात्—खन्यात्। चीवृ ८७९ आदान-संवरणयोः। चिचीव—चिचीवे। चायृ ८८० पूजानिशामनयोः। व्यय८८१ गतौ। अव्ययीत्। दाशृ८८२ दाने। ददाश—ददाशे। भेषृ ८८३ भये। 'गतौ' इत्येके। भेषति—भेषते। भ्रेषृ ८८४ भ्लेषृ ८८५ गतौ। अस ८८६ गतिदीप्त्यादानेषु। असति—असते। आस—आसे। अयं धान्तोऽपि। स्पश ८८७ बाधनस्पर्शनयोः। स्पर्शनं ग्रथनम्। स्पशति—स्पशते। लष ८८८ कान्तौ। 'वा भ्राश—' (२३२१) इति श्यन् वा। लष्यति—लषति। लेषे। चष ८८९ भक्षणे। छष—८९० हिंसायाम्। चच्छषतुः। चच्छषे। झष—८९१ आदान संवरणयोः। भ्रक्ष ८९२ भ्लक्ष ८९० अदने। भक्ष इति मैत्रेयः। दासृ ८९४ दाने। माहृ ८९५ माने। गुहू ८९६ संवरणे।

The penultimate ( अ ) of the roots गम्, हन् जन्, खन् and घस् elides when an affix, which begins with a vowel and drops the indicatory ग् or क् or ङ्, follows—but not when अङ् follows ( though it drops the ङ् ). Thus खन्+अतुस्—खन् खन् अतुस्—ख खन् अतुस् ( by हलादिः शेषः )—कखन् अतुस् ( क by 'अभ्यासे चर्च' ) चखन् अतुस् ( 'कुहोश्चुः' ) —चख्न् अतुस् ( 2363 )—चख्नतुः। Similarly चख्नुः—चख्ने—चख्नाते etc. गम्—जग्मतुः। हन्—जघ्नतुः। जन्—जज्ञे। घस्—जक्षतुः। But when अङ् follows the form is अगमत्—अघसत्। अव्ययीत् no वृद्धि because व्यय् ends

in य् and hence 'ह्म्यन्त—' ( 2299 ) applies. असु—to go, shine and to take. असति—असते (because स्वरितेत्) आस by 'अत आदेः' चक्षतुः—कक्ष् अतुस्—चकस् अतुस् ( अभ्यासे चर्च )—चक्षतुः (by 'इ ( 146—6. 1. 73 )). गुहू ( गुह )—to conceal.

मित—। गमश्च हनश्च जनश्च खनश्च घस्चेति द्वन्द्वात् षष्ठीबहुवचन किङति+अनङि इतिच्छेदः। 'ऊदुपधाया गोहः' (६।४।८९) इत्यत उप इत्यनुवर्त्तते। तदाह—एषाम् उपधाया: इति। 'अचिश्नुधातुभ्रुवां य्वोरियङ् (६।४।७७) इत्यतोऽचीत्यनुवर्त्यते। स च (अचीति) अङ्गाक्षिप्तङित्प्रत्य विशेषणम्। ततश्च तदादिविधिर्लभ्यते। अतएवाह—अजादौ इति। अच् यस्येतिविग्रहः। तादृशि मित्प्रत्ययस्य कित्प्रत्यये ङित्प्रत्यये च परे इत्यर्थः। अनङि प्रसज्य—प्रतिषेध इत्याह—'न त्वङि' इति। अङी ङित्त्वेऽपि तस्मिन् परे गमादे सुपधालोपो नेत्यर्थः। चख्नतुरिति—खन् खन् अतुस्—('असंयोगाल्लिट् कित्'—(१।२।५) इत्यनेन अपितः तसः स्थाने आदिष्टस्य—अतुसः कित्त्वं बोध्यम्) इति हलादिशेषे—ख खन् अतुस् इति जाते 'अभ्यासे चर्चे'ति (२१८२) चर्त्वे—क अतुस् इति सम्पद्यमाने—कुहोश्चुरिति (२२४५) ककारस्य चकारादेशे धातोरुप लोपे च चख्नतुः। असत्यस्मिन् सूत्रे तु गुणाभावे आदेशादित्वाद एत्वा च चखनतुरिति स्यात्। एवं चख्नुः—चख्ने चख्नाते इत्यादौ बोध्य गमादीनां तु जग्मे, जघ्ने, जज्ञे, जक्षतुरित्यादि क्रमेण ज्ञेयम्। अनङि किम् अगमत्—अघसत् इत्यादि। आशीर्लिङि आत्वविकल्पार्थमाह—ये विभाषेति अव्ययीत्—यान्तत्वात् 'ह्म्यन्त—' (२२९९) इति वृद्ध्यभावः। अयम् इति इत्यर्थः। लष्यति—लषति—पचे लष्यते लषते (स्वरितेत्त्वात्)। लेषे—एत्व अभ्यासलोपौ। चष भक्षणे—चचाष—चेषतुरित्यादि। चक्षतुः 'छे च' (१ —६।१।७३) इत्याभ्यासकार्य्यादनन्तरं तुगागमेन रूपम्। 'आदेशश्चेह वैरूप संपादक एवाश्रीयते—' (२२६१) इत्युक्तत्वादेत्वाभ्यासलोपौ न। गुहू—गु (ऊदित्करणमिड्विकल्पार्थम्)—संवरणम्=गोपनम्।

२६४—। ऊदुपधाया: गोहः ॥ ६।४।८९ ॥

दी—। गुह उपधाया ऊत् स्याद् गुणहेतावजादौ प्रत्यये। गूहति—गूहते। ऊदित्वादिड्वा। गूहिता—गोढ़ा। गूहिष्यति—घोक्ष्यति। गूहेत्। गुह्यात्। अगूहीत्। इडभावे क्सः। अघुक्षत्।

The उपधा or penultimate i.e. the उ of गुह become ऊ (ऊत्) when an affix which begins with a vowel and at the same time occasions गुण। Thus गुह् शप् तिप् (and ते) गूहति—गूहते. (Here अति (शप्+तिप्) and अते are considered as गुणहेतु). The root being ऊदित्, the augment इट् will come optionally गूह इट् ता=गूहिता (here ता along with इट् (इता) is considered an अजादिप्रत्यय hence the ऊदादेश)। गुह+ता=गोह्ता (by 'पुगन्त—' (2189))—गोढ् था (by 'हो ढः' (324—8. 2. 31) and 'झषस्तथोर्धोऽधः' (2280—8. 2. 40))=गोढ्ढा (by 'ष्टुना ष्टुः' (113))=गो ० ढा (by ढो ढे लोपः (2335—8. 3. 13)). This is in the इडभावपक्ष। गूहिष्यति,—घोक्ष्यति (option of इट in लृट्)। In the former case (गूहिष्यति) इष्यति is a गुणहेतु अजादिप्रत्यय hence ऊत्व। In the latter case गुह्+स्यति=गोढ्क् स्यति (by 'षढोः कः सि' (295))=घोक् ष्यति (by 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' (326—8. 2. 37))=घोक्ष्यति। In आत्मने—गूहिष्यते—घोक्ष्यते। गूहेत्—(विधिलिङ्)। गुह्यात्—(आशीर्लिङ्) here there being no अजादिप्रत्यय there is no ऊत्व and it being कित् there is no लघूपधगुण and finally गुह having no उ at the end, the rule 'अकृत्सार्व—' (2298) does not apply; hence no दीर्घादेश)। अगूहीत—(लुङ् इट पक्ष) गु is

changed to गू for इट् is an अजादिप्रत्यय। Thus अट् गुह् सिच् ईट त्=अगूह इ इष् ईत्=अगूहीत् (सलोप by 'इट ईटि' (226 When इट is wanting, on account of its ऊदित्व क्स come in by 'शल इगुपधात्—' (2336) giving अघुक्षत्—अट् गुह् तिप्=अगूह् स त्। There being no अजादि प्रत्यय—गुह is not and क्स being कित् it (गुह) is not gunnated. Thus result is अगुह् सत्=अगुढ् स त् ('हो ढः')=अघूक् स त ( 'एकाचो बशो भष्—' ग is changed into घ and by 'षढोः कः सि' is replaced by क् then by षत्व the form is)=अघुक्षत्। O forms in परस्मै. लुङ् are अगूहिष्टाम्—अगूहिषुः etc and अघुक्षता अघुक्षन् etc.

मित—। ऊत्+उपधायाः+गोहः इतिच्छेदः। गोह उपधायाः ऊकारः स्यादिति सामान्यतोऽर्थः। गोह इति किम्? गुह इत्यस्य विकृतो निर्दे कथमित्यकारं निर्द्देशः। गुणग्रहणं यथा प्रत्याख्यायेत इति कृतं वं निर्दे अतएव वृत्तौ आह—गुह उपधाया ऊत् स्याद्गुणहेतावित्यादि। अजादौ इति ' अ—' इत्यतो'ऽचि' इत्यनुवर्त्य तेन अङ्गाचिप्तप्रत्ययो विशेष्यते। विशेषण तदादिविधिस्तदाह—अजादौ प्रत्यये परे इति। गूहति—गूहते—अत्रोभयत्र अजादिप्रत्ययत्वमादाय ऊदादेशो विहितः। एवमन्यत्र। एवञ्च गुणहेतावित्युक्त गुणापवादो ज्ञेयः। अन्यथा हि लघूपधगुण एवात्र स्यादिति दिक्। ऊदित्वादि गूहिता—गोढ़ा (लुटि इड्विकल्पात् रूपद्वयम्)। तत्र पूर्व्वत्र इटोऽजादित्व ऊत्वम्। ततश्च गुणाभावः। अन्यत्र तु इडभावे गुह् ता इति स्थिते लघूप गोह् ता इति जाते 'होढः' (३२४), 'झषस्तथोर्धोऽधः' (२२८०) 'ष्टुना ष् (२१२) 'ढो ढे लोपः' इति क्रमेण—ढत्वधत्वष्टुत्वढलोपेषु——कृतेषु गोढ़ा गूहिष्यति—घोक्ष्यति (लृटि परस्मैपदपक्षे रूपे) गूहिष्यतीति पूर्व्ववत्। इत्यत्र त्वयं विशेषः—गुह् स्यति—गोह् स्यति—घोढ् स्यति 'एकाचो—'इति

षत्वभावेन षकारः 'हो ढः' इति च हकारस्य ढकारः ततः घोक्ष्यति—'षढोः कः सि' (इत्यनेन) ततः षत्वे इण्कोरादेशप्रत्यययोः इति, यथोक्तं रूपम्। गूहेत्—(विधिलिङ्)। गुह्यात् आशीर्लिङि अजादिप्रत्ययाभावात् 'किदाशिषि' इति कित्वेन गुणाभावात्—'ऊदुपधाया—' इत्यस्याविषयत्वाच्च ऊत्वगुणदीर्घनिषेधा बोध्याः। लुङ्यपि ऊदित्वेन 'स्वरति—' 2279 इति इड्विकल्पादाह—अगूहीत् (इट—अजादित्वात् पूर्ववत् ऊत्वादि) इत्यादि—इडभावे अघुक्षत्—अट् गुह् क्स (शल इगुपधात्—' (२३३६) त—ततो सम्भावाद् ढत्वकत्वषत्वेषु सत्सु अघुक्षत्। अथ गूहतेरात्मनेपदपक्षे लुङि विशेषमाह—

२३६५। लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥७।३।७३॥

दो—। एषां क्सस्य लुग् वा स्याद्दन्त्ये तङि। ढत्वधत्वष्टुत्व-ढलोपदीर्घाः। अगूढ—अघुक्षत। 'क्सस्याचि' (२३३७) इत्यन्तलोपः। अघुक्षाताम्। अघुक्षन्त। अगुह्वहि—अघुक्षावहि। अघुक्षामहि।

अथाजन्ता उभयपदिनः। श्रिञ् ८९७ सेवायाम्। श्रयति—श्रयते। शिश्रियतुः। श्रयिता। 'णिश्रि—' (२३१२) इति चङ्। अशिश्रियत्। भृञ् ८९८ भरणे। भरति। बभार। बभ्रतुः। बभर्थ। बभृव। बभृषे। भर्त्ता।

The affix क्स after दुह, दिह, लिह and गुह elides optionally when a dental तङ् i.e. आत्मनेपद affix follows. Thus when there is elision of क्स there will occur ढत्व धत्व, ष्टुत्व, ढलोप and दीर्घ [i.e. ढत्व of ह् by 'हो ढः' (324), धत्व of त by 'झषस्तथोर्धोऽधः' (2280), ष्टुत्व i. e. ढत्व of this धत्व by 'ष्टुना ष्टुः' (113), ढलोप i. e. the former ढ of हो ढः disappears by 'ढो ढे लोपः'

( 2335 ) and दीर्घ i. e. longness of the penult—( उपधा ) of गुह by 'ढ्रलोपे पूर्व्वस्य दीर्घोऽणः' ( 174—6. 3. 111) operate ] in order giving अगूढ़ ('the root cannot have ऊ because there is no अजादि affix and it is not gunnated for क्स is कित् ) and when there is क्स present the form is अघुक्षत ( see अघुक्षत in the preceding rule ). अघुक्ष drops its last accent 'अ' when आताम् and अन्त follow by 'क्सस्याचि ( 2337) and through the result of this elision we get अघुक्षाताम्—अघुक्षन्त and not अघुक्षेयाताम् etc. by 'आतो ङितः' ( 2235 ). अगुह्वहि—अट् गुह् क्स वहि ( क्सलुक् )=अगुह्वहि the व of वहि is दन्त्योष्ठ hence 'होढ़:' ( 324 ) does not apply and गुह is not gunnated for क्स is कित् । अघुक्षावहि ( alternative form—here ग is turned into घ by 'एकाचो—' ( 326 ) and 'आ' comes in by 'अतो दीर्घो यञि' ) । अघुक्षामहि—here अगुह्महि cannot be taken as an alternative form for म is ओष्ठ्य दन्त्य । दुह, दिह, लिह will give अधुग्ध—अधुक्षत, अदिग्ध—अधिक्षत and अलीढ—अलिक्षत etc. Here end गूहत्यन्ता स्वरितेत: ।

अथाजन्ता etc.—upto नीञ् ( 901 ) प्रापणे । श्रयति—श्रयते ( श्रि+शप्+तिप्=श्रे अ ति by 'सार्व्वधातकार्द्ध—' ( 2168 )=श्रय् अ ति by 'एचोऽयवायावः' ( 61 )=श्रयति । Similarly श्रयते । शिश्रियतुः—श्रिश्रि अतुस्=शि श्रि अतुस ( by 'हलादिः शेषः' )=शि श्रियङ् अतुस् by 'अचि श्नुधातुभ्रुवां वोरियङुवङौ' ( 271—6. 4. 77 )=शिश्रिय् अतुः । In णल्—शिश्राय by 'अचो ञ्णिति' ( 254—7. 2. 115). Similarly शिश्रियुः etc. Other forms are—शिश्रियिथ, शिश्रियथुः, शिश्रिय, शिश्राय—शिश्रय, शिश्रियिव, शिश्रियिम ( Note that in शिश्रियिथ etc. the augment

